देवतायाः पादौ हस्तौ मुखं प्रक्षाल्य द्विराचम्य देवतामूर्धन्यष्टावञ्जलीन्पुष्पाणां विकिरेदप्येकस्य पुष्पस्य वा हस्ताभ्यां पायुभ्यां नेत्राभ्यां यच्च किल्विषं अक्षैश्च मनसा क्षुधा तृष्णया निद्रया जिह्वया दन्तैस्तत्सर्वं नुदामि पुष्पविकिरणैस्तस्मात्तत्सर्वं क्षमस्व क्षमस्व नमोनम इत्येतत्प्रायश्चित्तं । **प्रारब्धे सत्रे न प्रविशन्त्यन्ये इन्द्रियविकलाः कुरूपाश्चायुवानश्च भक्तिमन्तः प्रविशन्त्येके सत्रान्तर्गता न निर्गच्छन्ति ऋते आधिव्याधिभ्यामस्वास्थ्यादासमाप्तेः सत्रस्या-** काशाग्नौ एतामाहुतिं हुत्वा सत्रं मे समाप्तमभूत्समाप्तः कामो मे समाप्तिकर्त्रे नमोनमः सर्वं स्विष्टं सुहुतं सुयष्टं करोतु मध्ये ये विघ्नास्ते ये तेभ्यो निर्गच्छन्तु दूरं स्विष्टकृतेऽग्नये स्वाहेति सत्री सत्रान्निर्गच्छेत्तस्मिन् गते सत्रिणो जुहृति दशान्वारब्धा अन्यैः । मुख्यः सामयिको वा स्विष्टं ह्येकेन न्यूनं बहुभिर्वा तत्स्विष्टं भवतु स्वाहेति हविर्मात्राशना **वामिनश्च** चेच्छक्तिमैथुनानन्दा जितेन्द्रिया मुण्डनाकारिणोऽस्नाना ईश्वरपरा मन्त्रजपपरा अथर्ववदीश्वरोपचारपरा निराशिषो निरभिवादना निरालिङ्गना भगवच्चिह्नचिह्निता देवतोच्छिष्टामृतपरा भवेयुर्या देवतां यष्टुमिच्छेयुस्तद्वयःसंवत्सरसंख्यातैः सामयिकैः शक्तिभिश्च ततोऽधिकैरधिकाभिश्च प्रारभ्यते सत्रं न न्यूनैर्न्यूनाभिर्न **न्यूनाभिरित्येके अधिकाभिश्च स्वरानन्दः** सत्रं प्रारभ्य देवतां विसर्जयेदासत्रसमाप्तेरित्येतत्**सात्रो विधिरे**तत्सात्रा परात्मन ईश्वरात्मानो भवन्तीश्वरात्मनामैश्वरा जीवात्मानो ब्रह्मवादिनो भवन्ति सात्रिकाः ॥ ६७ ॥

यदि सत्रेऽपक्षीयेत मुख्यः सामयिकः सामयिकान्यतमः पूर्ववन्मुख्यसामयिकत्वेन वरणं यदुदककुम्भं निनयित्वा मार्जयन्त्यात्मानमेषोऽवभृथः ॥ ६८ ॥

समाप्ते सत्रे यावन्तः सात्रिका निषेधास्तेऽप्रतिषिद्धा भवन्ति ॥ ६९ ॥

**अथोत्सवविधिं वक्ष्यामः** ॥ ७० ॥

औत्सवेन विधिना देवतां समर्चयन्संकल्प्यागाराणि चित्रितानि रञ्जितानि कारयेत् ॥ ७१ ॥

गजाश्ववेश्याभिरलङ्कृताभिः स्थिताभिरागारद्वाराण्यलङ्कृतानि कारयेत् । दुन्दुभ्यादिवाद्यैः स्तुतिघोषमुखैः सुगायकैः नग्नैः शिष्टोदितकार्यकरैः शूद्रैश्च द्वितीयकक्षायां स्वलङ्कृतैः शस्त्रोद्यतबाहुदण्डैः क्षत्रैः स्वलङ्कृतैः स्वलङ्कृताभिर्वेश्याभिर्यौवनोद्धताभिर्यजमानो ब्राह्मणैः कृतस्वस्त्ययनः कृतमुण्डनः कृताभ्यङ्गस्नानः स्वलङ्कृतो ब्राह्मणं स्नातमकृतविवाहं त्यक्तब्रह्मचर्यं उत्सवार्थे ऋत्विजं वृणुते उत्सवार्थं ऋत्विजं त्वा वृण इति । स वृतो जपेदीश्वरात्मँस्तव दासोऽहमिति नवाक्षरं महामनुं नव वा एते अर्णवास्तस्मादेष नवार्णवो यदीहैवं देवमर्चामस्तन्मनुमिति एतं जानीयाद्वा । ईश्वरस्य प्रथमैकवचनं संबुध्य तं चतुरक्षरं नामोहेच्छेषं पूर्ववत्तन्नवार्णवः सम्पद्यते । एष चतुष्पादो मन्त्रश्चतुष्पाद्धर्मस्तस्माद्य एनं वाचोच्चरति

स चतुष्पादं धर्ममेवात्मनि धत्ते । यदध्ययनं यजनं दानं दण्डश्चैते चत्वारो धर्मस्य पादा यच्चत्वारि वा एतस्य पदानि तच्चत्वार एव वर्गाः चत्वारो वा एते योगास्तस्माद्य एनं वाचोच्चरति स चतुरो वर्गान् योगानेवैवात्मन्धत्ते । एष वै सर्वसम्पादको मन्त्रस्तस्मादेष **चतुष्फलोऽयं चाण्डालेष्वप्युपदेश्यश्चाण्डालाच्चापि परिग्राह्यो** नास्य मन्त्रस्य दानादानाभ्यां गुरुशिष्यावुभौ सम्पद्येते तस्मान्महाफलोऽयमबन्धनो मन्त्रः यदस्य ग्रहणेच्छा साऽस्य दीक्षा यज्जपो मौनेन सा अहिंसा यस्य शिक्षा शुचिना वाऽशुचिना यत्र कुत्रचित्तत्तपो भवति स घृतो जश्चैनं भवति । यजमानो नापितं शिष्यान्मुण्डयैनमिति । यद्यस्य मार्दवेन लोमानि युक्तानि स्युरस्य चेद्भ्रूयुगं पक्ष्मरोमाणि शिखां वर्जयन्सर्वगात्राणि मुण्डयेल्लोमानि पूर्वं श्मश्रूणि पश्चात्केशान्नखानि ततो मुण्ड एवं यजमानवत् स्नानादि सर्व-देवतायास्तदिष्टाया विशेषार्चनमारभेत । यजमानो जीवानर्थवत्परिचरेद्वस्त्रजलगन्धपुष्प-मालाभिर्यथासम्भवं मानसत्कारैर्यथायोग्यं विशेषतो ब्राह्मणान्सुवासिनीः कुमारिकाश्च यामे यामे विशेषार्चनं कारयेत् वा सायं प्रातर्वा प्रातर्मध्याह्नसायंनिशीथेषु ॥ ७२ ॥

**वामी सर्वमुक्तवत्त्रिभिर्मन्त्रैरर्चयेदित्येव विशेषः** ॥ ७३ ॥

**सर्वेऽधिकृता यतोऽतो दीक्षिता भगवदुच्छिष्टं वामिनः क्रमेण व्युत्क्रमेण वा यथेच्छं पिबन्ति भुञ्जन्ति विहरन्ति स्त्रीभिरन्योन्यं च** ॥ ७४ ॥

**वामानां च ग्रहणमन्त्राः** ॥ ७५ ॥

इदं पवित्रममृतं गृह्णामि भवभेषजम् ।
पशुपाशसमुच्छेदं कारणं भैरवोदितमित्याद्यस्य ॥ ७६ ॥

ईशोच्छिष्टामिमां मुद्रां हार्दसन्तापनाशिनीम् ।
गृह्णामि हर्षजननीं भोज्यसम्भारसम्भृतामिति **द्वितीयस्य** ॥ ७७ ॥

गृह्णामि प्रमदां दिव्यां प्रमत्तां यौवनान्विताम् ।
सर्वदानन्दहृदयां मत्साधनविधायिनीमिति **कामपत्न्यर्थपत्न्यन्यतराम्** ॥७८॥

गृहीत्वा मानसकृत्पुष्पाञ्जलीन्प्रक्षिपन्ति प्रक्षेपयन्ति वा देवताप्रतीके ॥ ७९ ॥

प्रत्यर्चनमावाहनविसर्जने स्यातां । **नेत्येके सत्रवत्** ॥ ८० ॥

उत्सवान्ते ऋत्विजं दक्षिणाभिस्तोषयेत् ॥ ८१ ॥

**अथ बलिदानविधिं वक्ष्यामः** ॥ ८२ ॥

**द्विविधं बलिदानम्** ॥ ८३ ॥

**छेदनमुत्सर्गः** ॥ ८४ ॥

**छेदनं** राज्ञा समर्थेन वा ॥ ८५ ॥

शस्त्रेण वध्या घातनीयास्त्वपराधिनः ॥ ८६ ॥

त्रयो वा एते लोकास्तेषु तिस्रो वा योनयस्तेषूत्तरोत्तरो ज्यायान्तासूत्तरोत्तरा ज्यायसी तस्मादेष मानुषो वध्यो देवतायै अपकरोति । यो मानुषो यथा पशव अपकरोतीत्येते वध्यास्तस्माद्बलौ वध्याः ॥ ८७ ॥

यस्माद्वा दण्डो धर्मपादस्तस्मादेतेन प्रचरन्ति **ब्रह्मवादिनः** स्वर्गस्य लोकस्य जित्यै ॥ ८८ ॥

ये वा तपसैव निगृह्णन्ति दण्डेन दण्डयन्तः प्राणिनस्त आनन्त्यमश्नुवन्ति **तापसा इत्येके** ॥ ८९ ॥

**हिंसा द्विविधा** ॥ ९० ॥

**उद्योगहिंसा प्रासङ्गिकी हिंसा च** ॥ ९१ ॥

प्राणिनां वियोगाय देहेन कर्म कुरुते **यत्साद्या** ॥ ९२ ॥

तदितरा **द्वितीया** ॥ ९३ ॥

यथा वा यदग्नौ प्रक्षिपति काष्ठादिकं तदन्तर्गता जीवा हिंसिता भवन्ति । यदयं नेच्छति प्राणैर्वियोक्तुं तां न तत्प्राणैर्वियोक्तुं तान्कर्माचरति । कर्माचरन्नेव ते प्राणैर्वियुक्ता भवन्ति । तस्मादेषा प्रासङ्गिकी । तिष्ठता व्रजतासीनेन शयानेन द्वितीयया हिंसया पापं नाप्नोति नाभ्युदयं चेति **परानन्दः** ॥ ९४ ॥

तदितराया देवताया बलिदानादन्यत्र च हिंसन्पापमाप्नोति ॥ ९५ ॥

बलिं प्रयच्छन्हिंस्रान् शस्त्रेण हिंसन्नानन्त्यमश्नुत इति **सुरानन्दः** ॥ ९६ ॥

**अथ बलिदानविधिं वक्ष्यामः** ॥ ९७ ॥

स्नातोऽलङ्कृतो देवतामभ्यर्च्य देवतापुरतः पुरुषमितां भूमिमपहाय यथोद्देशं वा तत्र गर्तं खनित्वा तैजसं तदितरं वा स्तम्भं स यावान्भूम्यूर्ध्वं स्यात्तावन्तमेव लोष्टैः काष्ठैरश्मभिः पक्किलाभिर्मृद्भिश्च तं संपूरयेद्यथा स स्तम्भश्चालितो न स्यादन्यत्र उत्खननात् ॥ ९८ ॥

शाणीयं रज्जुं दृढामानीय तया बलिस्तम्भं संबध्य गन्धाक्षतपुष्पैश्चतुर्षु स्थानेषु स्तम्भमनेन हिंस्रस्य पशोर्देवसालोक्याये गत्यै त्वामलंकुर्वे अयममृतस्य मृत्योर्भयं पलायते त्वमेनं सुस्थिरं कृधि अमृतेन यशसा दीप्त्या नियोजयेयमविह्वलं कुर्विति स्तम्भमलङ्कृत्य प्रणयैतं सुकृतस्य पन्थानमारोहयैनमिति रज्जुं गन्धाक्षतपुष्पैरलङ्कृत्य तया पुरुषं कण्ठे बध्वा प्लावितं सर्वमुत्सृज्य **पशुहोमवद्धोमोऽत्र विहितं** प्राणवियोगानन्तरं घातहोमोऽत्र कृताकृतो होमः स राजा प्राणैर्दण्ड्यान् वियोजयन्नमृतमश्नुते द्विपादाश्च चतुष्पादाश्च पशवः पशुं पुरुषमर्चनाविशिष्टेन गन्धेन यदेनं लिम्पति भाले शिरसि ग्रीवायां खड्गप्रहारणीये कण्ठकूपे हृदि बाह्वोस्तदेनं बहिस्तः शुचिमेव कुरुते पुरुषं नग्नमार्द्रवाससं शुष्कवाससं वा प्राणैर्वियोजयेत्खड्गेन यस्मादयं योनेर्नग्नः पतितस्तस्मादेनं नग्नं छेदयेदिति **सुरानन्दो** यस्मादयं रुधिरेणार्द्रो निर्गच्छति तस्मादेनं क्लिन्नं छेदयेदि**त्युन्मादानन्दः** ।

शुष्कवासा ज्ञानमृच्छति तस्मादेनं शुष्कवाससं छेदयेदिति **ज्ञानानन्दो**ऽन्यः पशुर्न-ग्नश्छेद्यो न स्त्रीजातीयो बलिच्छेदः कुत्रचित्तस्याः शास्त्रिर्न शारीरिकीति **केचित्।** स्त्रीजातीयो बलिच्छेदोऽस्त्येवेत्यमृ**तानन्दो** गर्भिण्या अपि दुष्टायाः **गर्भिण्यां विशेषं वक्ष्याम**स्तां छित्वा उदरं प्रास्फोट्य खड्गेन स्वधितिना वा गर्भस्थानं ज्ञात्वा गर्भं निष्कास्य स यदि गर्भो जीवेत्तं जीवयेद्यदि शिरो ग्रीवया युक्तं स्यात्तं ग्रीवायां छित्त्वा सर्वं समानं यदि स न तथा स्याच्छरावे तं निधाय गोमयेनोपलिप्य गन्धाक्षतपुष्पैर्विकिरेद्दूर्वाभिश्चेषुमा-त्रावरं दीर्घवितस्त्यायतमधिकं वा यागीयं काष्ठं पांसुभिर्भूम्यां प्रपूरयेद्गमयितुं स्वर्गाय लोकायैनमुद्गमयितुं खड्गधारां वाहयितुं पूरयामीति पूरयेत् स्तम्भस्य पश्चात्तूर्ष्णीं तमलङ्कृत्य अन्यया रज्ज्वा ग्रीवान्तेन यज्ञकाष्ठेन संबध्य बन्धयेद्यथा स खड्गप्रहारोऽन्यत्र मा भूया-देवं बध्वा तां ग्रीवामभिमृशत्यधोलोकान्निर्वर्तयितुं स्वर्गाय लोकाय गमयितुं याम्यात्पाशा-द्विमोचयितुं कृच्छ्रादुन्मोक्तुमभिमृशामि धर्मिणेति वरुणस्य पाशोऽसीति रज्जुं चाभिमृश्य प्रथमो बलिर्द्वितीयः स्तम्भस्तृतीया रज्जुश्चतुर्थं यागीयकाष्ठं पञ्चमी बन्धनरज्जुः षष्ठः खड्गः सप्तमं रक्तपात्रमष्टमोऽग्निर्हृदो भूमिर्वा नवमोऽहं **इति** यद्यन्यश्छेदकः स्यान्नवमोऽयमिति ब्राह्मणक्षत्रशूद्रान्यतम आप्तो नान्यश्छेत्ता भवति दशमीयं देवतेतिं जपित्वा उदङ्मुखः प्राङ्मुखं प्रथमं षष्ठेन संयोज्य पुष्पं मूर्ध्नि न्यस्य चिरेण कालेन यद्गन्ता यदप्राप्यमयो-गिभिः यद्गच्छन्ति सुकृतिनस्तच्छिन्नो गच्छ सत्वरमिति करणान्यद्भिः संप्रोक्ष्याग्नेयो धर्मपालः-श्छेदयोग्यश्चेत्स एवान्यथान्यो लौह आनेयश्छेदयोग्यः ॥ ९९ ॥

तिरश्चीनाभिः कनिष्ठिकानामिकामध्यमातर्जनीभिर्गणितो दीर्घः शताङ्गुल आयतो दशाङ्गुलैरेवं धर्मपाललक्षणलक्षित एष **कालखड्गसंज्ञो** नास्मादधिक इष्यते ॥ १०० ॥ १४०० ॥

तदर्धायतस्तद्वद्दीर्घो **दिक्खड्गः** ॥ १ ॥

त्रिंशदङ्गुलदीर्घः पञ्चविंशत्यङ्गुलदीर्घश्चतुर्विंशत्यङ्गुलदीर्घो वा त्र्यङ्गुलायतोऽध्यर्धाङ्गु-लमितस्तन्नीचैर्वा **आकाशखड्गोऽयं चन्द्रहासश्च** ॥ २ ॥

**द्वन्द्वत्वावधिरिच्छा यजमानस्य कारोर्वा** ॥ ३ ॥

त्सरुत एकैकं दशकमङ्गुलीनां लम्बत्वे न्यूनमुद्दिश्य **विजयोऽसिः खड्ग-स्तीक्ष्णधारो दुरासदः श्रीगर्भो विशसनो धर्मपाल इत्येते** क्रमशो व्याख्याता भवन्ति ॥ ४ ॥

मनोहरायतो मनोहरदीर्घो मनोहराकृतिर्यया संज्ञयाभियुक्तस्तया संज्ञया व्याख्यातो **भवतीत्येके** ॥ ५ ॥

अहि वा कार्यं बलिदानं छिन्दि छिन्दि बलिं स्वाहा स्वर्गाय लोकायास्य प्राणानु-त्क्रामयैनं दुःखितं मा कृधीति खड्गमग्नौ निष्टप्यैवं त्रिरुत्तरैस्त्रिभिरन्तरितं रक्षोऽन्तरिता अरा-

तय **इति** निष्टस्ँरक्षो निष्टप्ता अरातय इति वायव्येनाग्नेयेन च तेजसा त्वां समनज्मीति निनीय तैरष्टभिर्धर्मान्तैर्नामभिः खड्गेऽष्टसु स्थानेषु गन्धाक्षतपुष्पाणि निक्षिपन्ति उभयत **इत्येके** द्विदलो द्विधाधारश्चेच्चतुस्त **इत्येके ।**

असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः ।
श्रीगर्भो विजयश्चैव धर्मपालस्तथैव चेति ॥

एषो वै कालस्य प्रतीकं यत्खड्गस्तस्मादेतस्मिन्नर्चितेऽर्चितो भवति चिद्भिन्नो जडो जडभिन्नश्चैतन्यं सर्वेषां जडानामधिष्ठात्र्यो देवता भवन्ति देवता वै जीवास्तैस्तैर्योगैस्तत्तद-धीश्वरत्वं प्राप्नुवन्ति यथा वाऽपां वरुणः । तत्खड्गं तत्सरौ धृत्वा अस्य स्वर्गाय लोकाय छिनद्मि एनं ग्रीवायामस्य देहं प्राणैर्वियोजयामि तीक्ष्णधारेण हुं फट् स्वाहेति सकृद्घातेन हस्ताभ्यां हस्तेन वा घातकश्छित्त्वा पात्रे रुधिरमानयेत् मुण्डं च तस्मिन् रक्तचन्दनं काश्मीरं वोदकं कर्पूरं दुग्धं दधि वा पुष्पं च निक्षिप्य हस्ताभ्यामाच्छाद्य **ॐ ऐं ह्रीं क्लीं चामु-ण्डायै विच्चे** इत्यभिमन्त्र्य देवताग्रे निधाय कालीगायत्र्या तत्तद्गायत्र्या वा संपश्य संभुङ्क्ष्वेति वा समर्पयेत्समर्पणं जलोत्सर्गो दीपं मुण्डे प्रज्वालयेत्कर्पूरं वा चतुष्पादस्य लोम्ना धूम-प्रिया भवन्ति तस्मात्तेभ्यो धूमं निर्गमयेत् प्रज्वाल्यैवं तस्मिन्शान्त्यै ज्योतिषि आकाशाग्नौ रुधिरं मुण्डं च बल्यभागेभ्यो रुधिरमुण्डादिदेवतोच्छिष्टभागेभ्यो य ईश्वरार्थं दीक्षिता जीवात्मानस्तेभ्यो यदर्थं दीक्षिता ईश्वरास्तेभ्यः स्वाहेति हुत्वा रुधिरतिलकी स्यात् यो वै एतत् रुधिरतिलकी स्यात्स देवतामेव वशीकुरुते वा स्वेष्टं तस्मात्तत्तिलकी स्यात् तच्छरीरं गर्ते निधाय पांसुभिः संपूर्याज्ञातामिव भूमिं कुर्याद्यस्तस्यां मनुं जपति स सिद्धमनुः सम्प-द्यते वा तच्छरीरं ग्रामादुत्तरतस्त्यजेद्वा सायं स्मशानभैरवाय स्वाहेति एकामाज्याहुतिं हुत्वा एकश्चेदग्निः, अग्नित्रयं चेदेतामेव त्रिष्वग्निषु होमशेषं समाप्य च काष्ठैः पुरुषकबन्धं चेत्पु-रुषचितां पशोश्चेत्पशुचितां कृत्वाऽग्निनाऽग्निभिर्वा दग्ध्वा तद्धूमतो धूमेन देवतादर्शनीयः सम्पद्यते सहैव धूमेन स्वर्गं लोकमेति देदीप्यमानस्याग्नेराउष्णत्वं प्रदेशे जपन्मनुः सिद्धः सम्पद्यते सोऽग्निर्यदोपशाम्येत्तद्वदग्निं पुनः प्रणीय दहेदेवमावृत्तौ **यावत्तद्भस्म स्यात्ता-वत्पूजाविरामो न विसर्जनं नियमाश्चैते भवन्ति यजमानस्य** स्वल्पाशनं स्त्रीसङ्गवर्जनं मूत्रपुरीषोत्सर्गयोः स्नानं निद्रायामाचमनं अशुचिस्पर्शने स्नानं **एते नियमाः सात्रिकाणामपि भवन्ति** यद्येतेन विधिना प्रोतं सत्रं स्याद्यस्माद्वा सत्रे यजमानाः सर्वे ऋत्विज इत्यस्थिमात्रावशेषे भस्मनि शीतलेऽस्थीन्यादाय पुनः श्वेतादग्निं प्रणीय ता-न्यस्थीनि दुग्धेन दृषदुपलाभ्यां दध्ना वा संपिष्ट्वा पिण्डं कृत्वा मधुनाप्लाव्य गोधूमपिष्टेन वा माषपिण्डेन वा संमिश्र्य पिण्डं वस्त्रेणावेष्ट्य तेनाग्निना दग्ध्वा यद्यस्थीन्यवशिष्टानि स्युः पुनरेवं भस्ममात्रावशेषे शीतले भस्मनि श्मशानकालिकोपासको भस्म तत्पट्सु स्थानेषु धार-येद्विजिगीषवश्च ये स्युस्तेऽपि धारयेयुः समण्डलां देवतामभ्यर्च्य विसर्जयेदेष बलिदान-

विधिर्वा तच्चर्मणो योगेन भोगं कुर्वीतेत्याकाशभैरवो यथाकथञ्चित्खड्गेन यद्धिंस्नान्हि-नस्ति स्वापराधकान्वा तत्कालिकेयो बलिः सम्पद्यत **इत्युन्मत्तभैरवो** वा यथाकथंचि-त्खड्गेन देवतापुरतश्छेदयेद्बलिं **एष बलिदानविधिः** ॥ ६ ॥

**अथ देवताप्रतिष्ठां वक्ष्यामः** ॥ ७ ॥

अश्मभिः सुधया च देवतालयं सम्पाद्य देवताप्रतीकं अश्ममयं तैजसं वा ब्राह्म-णेभ्यः स्वस्ति वाचयित्वा वास्तुदेवताभ्यश्च हुत्वा **दाक्षिणो** दुग्धेन प्रतीकं यदवयवक-रणे लौहैष्टङ्कैश्च शिलिपभिः कृता तस्मादेतस्मान्निर्हरामि दोषं दुग्धेन शीतेनाप्याययामि शुचिं च तेजसा समञ्जयामीति प्रक्षालयेद्देवमाभरणायुधवाहनशक्तिप्रतीकानि तस्याश्चै-तानि **वामी** चेदाद्येन शोधितेनाद्येन दुग्धोत्तरत ऊहे**दित्युन्मत्तभैरवो** दुग्धस्थान **इत्याकाशभैरवः** स्थितान्यासीनानि वाहनासीनानि वा प्रतिष्ठापयेत्प्रतिष्ठितायां देवताद-क्षिणतोऽव्यवहितं वाहनं वा मुखं देवतायाः शक्तिर्देवतावामतो दक्षमुखी तस्या वामतो वाहनं देवतावाहनमुखमेवं भवति स्थिरां प्रतिष्ठां यदि कामयीत स्थिरां चिराय प्रतिमां प्रतिष्ठापयामि न्यसामीति वा सुधया वान्येन प्रकारेण न्यसेद्यथा न चलिता स्यात्सावयवानि मनोहराणि तत्तद्ध्यानलक्ष्माणि स्थिरप्रतिष्ठाप्यानि भवन्ति नो इतराणि प्रतीकानि भवन्ति चरप्रतिष्ठाप्येवं विशेषस्तु चरा चिराय प्रतिष्ठापयामि न्यसामीति वासने न्यस्यैषा चरा भवति विशेषार्चनेनार्चयित्वाग्नीनग्निं वा प्रणीय हुत्वा पृथ्वीभ्यः स्वाहा अद्भ्यः स्वाहा तेजोभ्यः स्वाहा वायुभ्यः स्वाहा दिग्भ्यः स्वाहा कालेभ्यः स्वाहा आकाशेभ्यः स्वाहा स्थिरायै प्रतिष्ठायै स्वाहेति स्थिरायां चरायै प्रतिष्ठायै स्वाहेति चरायां यावन्ति प्रतीकानि भवन्ति पृथक् पृथक् तावन्तः प्रतिष्ठाहोमा भवन्ति होमशेषं समाप्य पारानन्दोऽर्चनान्ते देवतां समण्डलां विसर्जयेत्**प्रती-कानि द्विविधानि भवन्ति प्रतिष्ठया प्रतिष्ठापितानि विसर्जितदेवता-कान्यपि पूज्यानि** वन्द्यानि सन्तिष्ठन्त्येव तानि किमुतावाहितदेवताकानि सम्पूज्यानि वन्द्यानि भवन्तीति शालिग्रामशिलादिषु न प्रतिष्ठा व्यक्तावयवा कृता चेद्यथाध्यानं शालिग्राम-शिला तस्याः **प्रतिष्ठेत्येके** प्रतिष्ठापितधर्मा भवन्ति शालिग्रामशिलादिषु पार्थिव्यादिषु कृतासु प्रतिमासु अप्रतिष्ठापितासु आवाहिता देवता चैतानि वन्द्यानि पूज्यानि सम्पद्यन्ते तानि विस-र्जितदेवताकानि अवन्द्यानि अपूज्यानि सम्पद्यन्ते न पुनस्तत्रावाहनयोग्य**तेत्येके** देवतागा-रस्य त्रीणि द्वाराणि भवन्ति पुरस्ताद्दक्षिणत उत्तरतस्तेषामग्रतः सभास्थलानि भवन्ति सह-स्रहस्तमितः सर्वतो देवतागारगर्भो भवति द्विगुणानि सभास्थलानि भवन्ति तदर्धस्तदर्धस्त-दर्धतो यथासंभवं वा तत्परितः परिध्यगाराणि स्तम्भतोऽवच्छिन्ना**न्येक** इच्छन्ति । **अथ कृताकृतं** देवतागारपरितः पुनः साम्रकरवीरपलाशोदुम्बरबिल्ववंशवटाश्वत्थखदिराद्या-न्वृक्षान्महतो रोपयेद्यथासंभवं तडागान्वापीकूपांश्च खानयेत् प्रवृद्धोद्भूतजलाजलाशयान्दी-नातिथिपरमहंसरुग्णानां च वासाय यथायोग्याः शाला रम्याः कारयेत् रुग्णानामर्थाय औष-

धादि वितरेचे तं तत्र तथा प्रकल्पयन्ति एवं तत्तदर्थिभ्यस्तत्तद्दातॄन् एतद्रक्षार्थं शोधनार्थं संमार्जनादिभिः शूद्रांश्च प्रकल्पयेदन्नाच्छादनदानाद्यैर्भृत्यानेतस्य सर्वस्य परितो देवतागारस्य सिद्धये दृढकुड्यविशेषं प्रकल्पयन्ति वास्तुशास्त्राद्विशेषोऽनुगन्तव्यो मनोहरत्वादिर्भूमिपरीक्षणादिबलिदानैः प्रचरन्ति ब्राह्मणभोजनैः सहस्रनामहोमैः स्वाहान्तैर्नामभिर्महद्भिरुत्सवै रुधिरहोमैरिति कृताकृतं निःशक्तिकां निर्वाहनां प्रतिमां प्रतिष्ठापये**दित्युन्मत्तभैरवो** निरायुधामिति **ज्ञानानन्दो ब्राह्मण** एव प्रतिष्ठया प्रतिष्ठापयेन्न क्षत्रादि**रित्येके** एवं प्रतिष्ठापयति वा यथाकथञ्चित्सोऽश्नुत आनन्त्यं ऋतेऽवयवभ्रंशाद्देवताप्रतीकं न लौकिकं सम्पद्यते **इत्युन्मादानन्दो** लौकिके तस्मिन्जाते सति पुरुषद्वयमितां खनित्वा भूमिं तस्यां तं निक्षिप्य पांसुभिः पूरयित्वा तां भूमिं पद्यायोग्यां प्रकल्पयन्ति देवतागारे पुनः प्रतिष्ठया प्रतिष्ठापयेद्द्वितीयं प्रतीकमागारं च जीर्णं नवमिव प्रकल्पयन्ति वास्तुहोमेन च प्रचरन्ति ॥ ८ ॥

## इति पारानन्दसूत्रे उत्तराध्याये प्रथमाह्निकम् ॥

---

## पारानन्दसूत्रे द्वितीयाह्निकम् ।

**अथ देवताप्रसादसिद्ध्येऽनुष्ठानक्रमं वक्ष्यामः ॥ ९ ॥**

संवत्सरमयनं ऋतुं मासं पक्षं दिवा नक्तं वानुतिष्ठेत् ॥ १० ॥

ब्राह्मणैः पुण्याहं वाचयित्वा दीक्षाधर्मानङ्गीकृत्य स्नानवर्जं यथापक्षं एकदार्चनमित्यनुष्ठानं **दक्षी** मध्याह्ने **वामी** निशीथे वा प्रातर्**दक्षी** सायं **वामी** वोभयोरन्यतर**मौत्तरः** ॥ ११ ॥

य एनं विदधाति संवत्सरं स देवतां पश्यति स देवतां पश्यति तथा भूत्वा दक्षी मध्याह्ने जुहुयादाहुतीनां सहस्रं वा नाम्नां सहस्रस्यैकमेकं शतं नाम्नां पृथक् पृथक् स्वाहान्तैर्नामभिर्ब्राह्मणान्दश मधुपर्केणार्हयित्वैकेनैकेन हावयेत् । अवदानधर्मेणावदाय चरुं बलीनां रुधिरं वा आज्येनानवदानेन दुग्धेन दध्ना वोक्तवद्विकल्पः कालस्य ॥ १२ ॥

य एवं विदधात्ययनं स देवतां पश्यति स देवतां पश्यति ॥ १३ ॥

तथा भूत्वोक्तवत्काले पारानन्दैश्छेद्यान्बलीन् छेदयेत् ॥ १४ ॥

ऋतुं य एवं विदधाति स देवतां पश्यति स देवतां पश्यति ॥ १५ ॥

वा विद्वान् स्वगात्ररुधिरं दद्यात् ब्राह्मणो न दद्या**दित्येके** ब्राह्मणोऽपि दद्या**दित्युन्मत्तभैरवः** ॥ १६ ॥

ब्राह्मणः शिरसो हृदयस्य वा क्षत्रियो बाह्वोः कण्ठस्य वा वैश्य ऊर्वोरुदरस्य वा ललाटस्य शूद्रोऽसृग् दद्याद्बलिदानविधिना वा मार्जयेत्स्वगात्ररुधिरेण देवताप्रतीकं वा नैवेद्यनिवेदने रुधिरं निष्कास्य द्विराचामेत् स्वधितिमवलम्ब्य दक्षिणहस्तेन स्वधितिरसि देवानां त्राता असि वनानां छेत्ता असि रुधिरपोऽसि प्रियकृद्देवानां धर्मपोऽसि यथा वा उच्छिष्टं वत्सस्य स्तन्यं तस्माद्यत्पयस्तद्देवता गृह्णन्ति एवं त्वदुच्छिष्टं रुधिरं देवतास्तस्मात्स्वधिते मा मा हिंसीरिति स्वधितिं गृहीत्वा वामेन पाणिना तृणं दूर्वां वा गृहीत्वा अमृतमसि सोमोऽस्याप्यायितासि देवानामोषधे त्रायस्व मामिति तृणान्तर्हितां त्वचं **कृत्वा हुंफडिति** रुधिरं निष्कास्य पात्रे ईषच्चैतजलेन संमिश्र्य सावित्र्या गायत्र्याऽभ्युक्ष्याभ्युक्ष्य तद्विनियोजये**दित्येष स्वगात्रासृग्बलिविधिः** ॥ १७ ॥

**वामी** स्त्रियमभिमृशति स्त्रीरसि देवतानां प्रेयस्यसि श्रीरसि यूनां अरणिरसि मनुष्याणामिति तां दृढमालिङ्ग्य संचुम्ब्य च मुखं स्वीयमुत्थितलिङ्गं नवनीतेनालिप्य भगं निर्मन्थेद् यदि वा सा पूर्वं स्रवेत् रजसा वा उद्रिक्ता स्यात् तदा तत्रैव स्वीयमपि बीजमुत्सारयेत् । आचान्तः शुचिर्भगं गन्धाक्षतपुष्पैरभ्यर्च्य तस्माद्दर्व्या पात्रस्थे घृते निष्कास्य तद्घृतेनापूर्य स्थण्डिले देवताप्रतीकाग्रतो रमिति वह्निं प्रदीप्य बलिरसि देवतानामिति वह्नौ निनयेत् ॥ १८ ॥

देवतां विसर्जयित्वा च विरमेत् ॥ १९ ॥

देवतां समभ्यर्च्य पुष्पैर्नाम्नां सहस्रेण शतेन दशभिर्वार्चयेत् ॥ २० ॥

मासं य एवं० ॥ २१ ॥

यस्याः यद्गन्धं तद्गायत्र्या तत्प्रतीकं तेन गन्धेन विलिम्पेत् । शेषमुक्तवत् ॥२२॥

पक्षं य एवं० ॥ २३ ॥

प्रातःस्मरणं तस्या यस्या उपासका भवन्ति । शेषमुक्तवत् । दिवा य एवं० ॥२४॥

अङ्कनं कवचावृत्तिश्चागमोक्तसंख्यावत् ॥ २५ ॥

नक्तं य एवं० ॥ २६ ॥

**अनुष्ठानोत्सर्गस्नानम्** ॥ २७ ॥

अनुष्ठानान्ते ब्राह्मणीभ्यो जीवपत्नीभ्यो जीवप्रजाभ्यः ब्राह्मणेभ्यो विद्वद्भ्यस्तत्पतिभ्यः कुमारिकाभ्यः आदशवर्षात्कुमारिकाणां कुमारित्वमापुमभिलाषाद्वा । वस्त्रालङ्काराम्बुघटोपानच्छत्रादर्शमृदुशैय्यागृहारामवापीकूपतडागान्नानि च प्रयच्छेत् ॥ २८ ॥

**वामानुष्ठानान्ते** कालिकेयस्य वेश्याभ्यश्चैवम् ॥ २९ ॥

यथासंभवमुक्तेभ्यो यथासंभवं दानम् ॥ ३० ॥

**सौरान्ते** ब्रह्मचारिभ्यः । **वैष्णवान्ते** गृहस्थेभ्यः । **शैवान्ते** गृहस्थेभ्यो **वैष्णवान्ते** वनस्थेभ्यश्चे**त्येके** ॥ ३१ ॥

**गाणपान्ते** गृहस्थेभ्यः **शैवान्ते** संन्यासिभ्य **इत्येके शाक्तान्ते** स्नातकेभ्यः अकृतविवाहेभ्योऽन्नं सत्कारपूर्वकं दद्यादनुष्ठानकृन्नादत्तान्नः स्यात्**सर्वेषां** स्नातकोऽकृतविवाहो भवति तस्मात्सर्वान्ते तेषां तेषामसंभवे तस्मै दद्यात् । यदमुण्डितं मुण्डयति, यदसंस्कृतशरीराय संस्कारान्प्रयच्छति, यदनाच्छादिताय वासः प्रयच्छति, यत्स्नातायानुलेपनं यदनुपानत्कायोपानहौ प्रयच्छति, यत्क्षुधितायान्नं पिपासते पानीयं प्रयच्छति, तदात्मनोऽनुष्ठानं पूर्णमेव कुरुते । यथा यथा वा यस्य यस्य क्लेशाः स्युस्तां तथा तथा च परेषां छेदयेत् । यत्परेषां क्लेशाञ्छिनत्ति तदयं छिन्नक्लेशः स्वयं सम्पद्यते, तस्मात्तत्तदर्थिभ्यो यथासंभवं दद्यात्तत्तद्ब्रह्मचारिणे वस्त्रान्नवसूनि गृहस्थायागारवस्त्राभरणान्नवसूनि नागारवसूनीतरस्मै वसु ब्रह्मचारिण **इत्युक्तं तत्प्रत्युच्यत इत्येके** वनस्थयोग्यानि स्वादून्यारण्यानि भक्ष्याणि मृदून्यारण्यानां पशूनां चर्माणि । आरण्येभ्यः पशुभ्यो भयं तान्हत्वा संन्यासिभ्योऽन्नवस्त्रे **एषोऽवभृथः सर्वेषाम्** ॥ ३२ ॥

तथाभूत्वोक्तवत्काले स्नानं कुर्यात् ॥ ३३ ॥

संवत्सरं य एवं विदधाति स देवतां पश्यति स देवतां पश्यति ॥ ३४ ॥

स्वगात्रेषु स्वेष्टदेवताचिह्नानि चिह्नयति मृत्तिकयान्येन वा तथाभूत्वोक्तवत् ॥ ३५ ॥

अयनं य एवं विदधाति० ॥ ३६ ॥

तथाभूत्वोक्तवत् दिव्यसहस्रनामपाठम् ॥ ३७ ॥

ऋतुं य एवं विदधाति० ॥ ३८ ॥

जपं संख्याक्रमनुवर्णानां वा देवतावयःसंवत्सरसंख्यया यथा वा मूर्तिः प्रतिष्ठाप्या देवतावयःसंवत्सरसंख्या तत्संख्या वितस्तिभिर्भवति । दीर्घा वेष्टमानेनैवं जपो भवति । इष्टसंख्याको वा तद्वयःसंवत्सरसंख्यया सहस्राणि स्ववयःसंवत्सरसंख्यालक्षान् जपं जपति । **एतस्यान्ते अभिषेको मार्जनं गन्धानुलेपः पुष्पाणि होमो ब्राह्मण-भोजनं तर्पणमित्येतानि सप्ताङ्गानि भवन्ति** तान्येतस्य पूरकाणि भवन्ति । तद्गायत्र्या सर्वाणि निवर्तयेदित्येके ॥ ३९ ॥

सप्तस्वङ्गेषु ईषदीपदंशं स्वयं निर्वर्तयेद्ब्राह्मणैः शिष्टम् ॥ ४० ॥

जप्तेन मन्त्रेण सर्वाणि यदीच्छति तदा सर्वाणि स्वयमेव निर्वर्तयेत् ॥ ४१ ॥

स्वयमशक्तो गायत्र्यसंभवे तस्या देवताया मूलमन्त्रेण सर्वाणि निर्वर्तयेत् ॥ ४२ ॥

जपदशांशेनाभिषेकस्तद्दशांशेन मार्जनं तद्दशांशेन गन्धानुलेपनं तद्दशांशेन पुष्पाणि तद्दशांशेन होमस्तद्दशांशेन ब्राह्मणभोजनं तद्दशांशेन तर्पणम् ॥ ४३ ॥

वा सर्वाणि जपदशांशेन भवन्ति ॥ ४४ ॥

अभिषिञ्चामीति मन्त्रमुक्त्वाद्भिरभिषेचनं प्रतीके ॥ ४५ ॥

मन्त्रमुक्त्वा मार्जयामीति मार्जनं प्रतीके कुशैर्दूर्वाभिर्वा ॥ ४६ ॥

दर्व्याङ्गुल्या गन्धं मन्त्रमुक्त्वा गन्धेनानुलिम्पामीति लेपयेत्प्रतीके ॥ ४७ ॥

मन्त्रमुक्त्वा पुष्पेणार्हयामीति पुष्पार्पणं प्रतीके ॥ ४८ ॥

मन्त्रमुक्त्वा स्वाहेति जुहुयात् ॥ ४९ ॥

ब्राह्मणेषूपविष्टेषु तेषामग्रतः पात्रेषु सुसंस्कृतेषु अन्नेषु ब्राह्मणदक्षिणहस्ततले मन्त्र-मुक्त्वा वषडित्यवदानधर्मेण स्रुचा हुत्वा वामहस्ततले स्रुवेण जलं तूर्ष्णीं हुत्वा ते च ब्राह्मणाः स्वीये स्वीये कमण्डलौ प्रक्षिपन्ति जलं जलपूर्णे एवमन्नं पात्रे भुक्तवत्सु तेषु तान् गन्धपुष्पस्रग्वस्त्रैरर्चयेत् ॥ ५० ॥

दुग्धेन तीर्थोदकेन वा तर्पयन्ति दैवेन तीर्थेन जलं मन्त्रमुक्त्वा तर्पयामीति प्रस्ना-वयन्ति ॥ ५१ ॥

सर्वाभिः संख्याभिः संख्यातानां जपानां शतेन सर्वाण्यङ्गानि निर्वर्तयेत्सहस्रेणे-त्येके ॥ ५२ ॥

दशांशत्वं भवेत्तावद्यावन्नैकत्वमेति च ।

एकत्वे समनुप्राप्ते तदाऽऽवर्तनमिष्यत इत्येके ॥ ५३ ॥

होमतर्पणमार्जनब्राह्मणभोजनमिति **चतुरङ्गमिति दिग्भैरवः** ॥ ५४ ॥

होमादि **त्र्यङ्गमिति कालभैरवः** ॥ ५५ ॥

मार्जनतर्पणाभ्यां **ह्यङ्गमित्याकाशभैरवः** ॥ ५६ ॥

प्राणायामान् दश वा तत्तद्वयःसंवत्सरसंख्याकान्कुर्यात् ॥ ५७ ॥

संवत्सरं य एवं विदधाति स देवतां पश्यति स देवतां पश्यति ॥ ५८ ॥

ध्यानं कुर्यात् ॥ ५९ ॥

अयनं य एवं विदधाति स दे० ॥ ६० ॥

यथागमं दानानि दद्याद्ब्राह्मणेभ्यः ॥ ६१ ॥

ऋतुं य एवं विदधाति० ॥ ६२ ॥

**अथ कालिकायाश्च ब्रूमो वामतः** ॥ ६३ ॥

काल्यै सिन्दूरं रक्तचन्दनान्यतरं भाले दत्त्वा स्त्रियमानीय तया मैथुनं सम्पाद्यो-चलितशुक्रो लिङ्गं भगान्निष्काश्य पात्रे सजले शुक्रमुत्तार्य तत्सुगन्धिपुष्पैः प्रकीर्य यवपिष्टेन जपया रक्तचन्दनेन च आमिश्र्य पाणिनाच्छाद्य यत्त्वं तदहं यदहं तत्त्वमिति स्वयंभूपुष्पत-र्पितामीश्वरात्मानं परमात्मभक्तां जीवात्मोपास्यां स्मशानवासिनीं तर्पयामीति जले स्थण्डिले वा कुशानास्तीर्य निनयेत् ॥ ६४ ॥

य एवं विदधाति० ॥ ६५ ॥

कृतान्यनुष्ठानानि न व्यर्थायन्ते देवताप्रसादसाधकानि भवन्ति वा स्वर्गदानि ॥ ६६ ॥

मुक्तकेशो दिगम्बरो रणे बाणमृतं चक्रगदाखड्गशूलपरशुपाशाङ्कुशान्यतममृतं छिन्नशिरसमच्छिन्नशिरसं वा रणे युद्धेन मृतं वा सुरूपं युवानं **रणसंवृत्तात्पञ्चदिन-मभिव्याप्य स्थितं शवमपर्युषितं भवतीत्येके । यावत्स्रवति रुधिरं तावत्तदपर्युषितमित्यन्ये ।** प्रत्यक्शिरसं प्राक्शिरसं दक्षिणपादमुदक्पादं वोर्ध्वमुखं पाणिना प्रेतं संस्पृश्याभिमन्त्रयते । प्रेतोऽसि प्रकर्षेणेतोऽस्माल्लोकाद्गमय विद्यया बलेनौजसा पराक्रमेण श्रिया सत्येनेति । तमधिरुह्य प्रजपन्मनुं वा पठन्स्तोत्रं वा रणमृते चतुष्पादे उदङ्मुखेऽप्येवं । चिताज्वालासमीपे वा प्रागस्थिसंचयनात्प्रशान्तवह्निके वा उच्छिन्नमनु-ष्यस्थितिकं यदालयं तच्छून्यालयमित्युच्यते । तस्मिन्वा व्याघ्रादिभयसंकुले वा शृण्वानो वा शिवारावान् य एवं वा विदधाति स कालीपुत्र इति ख्यातिं गच्छति । विद्यावान्बृहस्प-तिरिव धनी धनाधिप इव बली वायुरिव दुर्जयो मृत्युरिव सम्पद्यते । पेयं भक्ष्यं तदुच्छि-ष्टमिति यो भुङ्क्ते स महेश इव योगीन्द्रः सर्वसिद्धीशः सम्पद्यते ॥ ६७ ॥

यः स्तोत्रैः स्तौति स घोराण्येनांसि तरति ॥ ६८ ॥

तरुणीमर्थपत्नीं कामपत्नीं वा धर्मपत्नीं वेति कश्चिदानीय रजस्वलां यस्मिन्वाऽहनि सुतं भवति रजस्तत्प्रथमोऽहः उदयं उदयात्सवितुस्तावदेव रजस्वला स्यात् स प्रथमाहो-र्वान्ते पात्रे जलदूर्वागन्धपुष्पाक्षतैः संमिश्र्य सावित्र्या गायत्र्या चाभिमन्त्र्य तदुद्धृतेन तां प्रोक्षयति । यथा त्वं भगोऽसि भ्राजमानोऽसि रजसा एवं मां विद्यया वज्रसन्नहनेन बलेन

पराक्रमेण भ्राजमानं कृष्यमृतेन संप्रोक्ष्य सौवर्णेन दाम्ना सौवर्ण्या चार्धचन्द्रिकया गले करयोर्वलयाभ्यां कर्णयोः कुण्डलाभ्यां गन्धेन यथोद्देशं पुष्पैः पुष्पमालया चालंकृत्योत्तमास्तरणे पर्यङ्के तामूर्ध्वमुखीं नग्नां प्राक्शिरस्कां शाययित्वा दक्षे हस्ते दक्षं पादं वामे हस्ते वामं पादं तस्या दत्त्वा पुष्पसुगन्धतैलेन भगमालिप्य पुष्पैरवकीर्य एवं तस्या भगं पश्यन्नुत्तिष्ठन्प्राङ्मुखो नग्नो बद्धशिखः कृत्तकेशश्मश्रुलोमनखो विनाभ्रूयुगलोमभ्यो नेत्रपक्ष्मलोमभ्यश्च तद्रुधिरतिलकितो रक्तचन्दनतिलकितो वा स्रगनुलेपनो दशवारं कालीगायत्रीमन्त्रं वा तस्याः शतवारं सहस्रवारमेकवारं वा यथा कामयेत्तत्तथा जपेद्यद्युत्थितवीर्यः स्यात्पात्रान्तरे सजले वीर्यं गृहीत्वाऽनुत्थिते लिङ्गे तत्सजलं वीर्यं स्थण्डिल आर्द्रे तस्या भगे वा रतिः कामश्च तृप्यत्विति निनयेद्वस्त्राद्यैस्तां तोषयेद्य एवं विदधाति स सौन्दर्यवान्मदन इव भवति अपुनरावृत्तिं च सम्पद्यते ॥ ६९ ॥

तरुणीं रूपसम्पन्नामानीय तां स्नापयित्वा वस्त्राद्यैः सम्पूज्य सावित्र्या प्रोक्ष्य भगोऽसीति तां स्पृष्ट्वा सपवित्राभ्यां कराभ्यां भगमालभ्य अष्टोत्तरशतनाममूलमन्त्रान् जप्त्वा मैथुनं कुर्यादेष सर्वविद्येश्वरः सम्पद्यते ॥ ७० ॥

अष्टाभिर्योषाभिर्दिगम्बरो मुक्तशिखी मुण्डितमुण्डनीयः श्मश्रुकक्षलोमनखानि वा मुण्डितानि कृत्वागारं प्रविश्य सुगन्धप्रचुरं यथर्तुसुखदं प्रविश्य पूर्वादिदिक्षु ताः स्थापयेत्संस्थाप्योत्तरत एकां दक्षिणतश्चैकामेवं दश स्थापयेदित्येके । अपराजितायां दिशि विप्रमों श्रावकं त्वां वृण इति दक्षहस्तेन संस्पृशेत्स वदेद्वृतोऽस्मीति । तं मधुपर्केणार्हयित्वा ताश्च वस्त्रभोजनपेयैर्वेश्याभिः स स्वेन ता. भगलिङ्गसंयोगेन हासोपहासेन शक्त्यभावे ततस्तन्मण्डलं प्रविश्यासीन उदङ्मुखो गायत्रीं दशवारं जप्त्वा कालिकेयां जप्त्वा तं वदेदेनां गायत्रीं त्रिरुपांशु त्रिरुच्चैः श्रावयेति । श्रावयिष्यामीति प्रतिवदेद्यथाप्रैषं कुर्यात्तस्मै सौवर्णी दक्षिणा कुण्डलेऽङ्गुलीयकं माला वा एवं कृत्खेचरः सम्पद्यते ॥ ७१ ॥

यदि योषिदसंसर्गः स्याच्चेद्रेतः समुत्तार्य येन केनाप्युपायेनोत्तारणकाले कालीबीजं जपेत् श्रावकः स्मशानकालिक इति श्रावयेदेवं जप्त्वा श्रुत्वा सत्कविः सम्पद्यते तच्छुक्रमुत्तारितस्थण्डिले आर्द्रे निनयेदुत्तरतस्तस्मै ताम्रमन्नं च दक्षिणा जलं च वस्त्रयुगं वा उपानद्युगं वा छत्रं वा ॥ ७२ ॥

नग्नाया उपरि योषायास्तरुण्याः सौरतेन विधिना रमयन्महाकालीति त्रिर्जप्त्वा त्रिः श्रावकाच्छ्रुत्वा खेचरोऽमितबलदार्ढ्यपराक्रमः सम्पद्यते ॥ ७३ ॥

पापमुत्तर्तुकामो यथाकथञ्चित्सम्पादिते सुरते त्रिर्गायत्रीं जपेद्वा श्रावकाद्भगवति शिवे इति त्रिः शृणुयाद्यः स सर्वपापविमुक्तः सम्पद्यते ॥ ७४ ॥

मधुपात्रेषु दुग्धेन सितया चोपपन्नं भक्तं चतुष्पथं गतश्चतुष्पथे काल्यै बलिमिमं

हरामीति रक्तचन्दनेन लाक्षारसेनोक्षितं दत्वा तत्पश्चादुपविश्याष्टोत्तरशतं जप्त्वा अदर्शनः खेचरोऽमितगतिः सम्पद्यते ॥ ७५ ॥

जपान्ते पूजान्ते वा चमसान्पूरयति । प्रथमं त्वा चमसं देवतातर्पणाय जुष्टं लाक्षारसमाक्षिकाभ्यां संपूरयामीति ताभ्यां संपूर्योत्तरतो निदधाति । एवं द्वितीयं तृतीयं चतुर्थं पञ्चमं षष्ठं लाक्षारसमद्याभ्यां लाक्षारसदुग्धाभ्यां लाक्षारसेन सुरया दुग्धेन ऊह्योद्दिश्य पूरयेत् षट् पात्राणि । तरुणीमरोगां वेश्यामानीय अनुलेपनोन्मर्दनाभ्यां संस्कृत्य स्नापयित्वाऽऽच्छाद्याऽलङ्कृत्य हास्यविनोदाभ्यां कामं रतिं चावाहयेदस्यै रतिमावाहय इति तस्या मूर्ध्नि रक्तपुष्पं न्यसेत्कामाय काममावाहय इति । स्वमूर्ध्नि तदेवं न्यस्य पाणिना नग्नाया भगं परामृशति । भगस्य भगमसीत्येव वा लिङ्गस्य लिङ्गमसीति दृढमुत्थितं लिङ्गं भगस्याश्रयावस्थ इति कुचौ परामृश्य भगमालभ्य शोणितशुक्राभ्यां शुक्राय योनिक्षालनतोयाय च त्वा जुष्टं निर्मिश्रामीति भगे लिङ्गं निवेश्य सुरतोत्सवं सम्पादयेद्यदि वायं शीघ्रं द्रवेत्का तत्र **प्रायश्चित्तिरि**ति निष्कासयन् लिङ्गं रते शोणितमसीति लाक्षारसममिमन्त्र्य भगे प्रत्यस्येदुत्तारिकायां नलिकायां तर्जन्या लिङ्गोपरि अङ्गुष्ठेनैवं धृत्वा भगात्तदमृतं गृहीत्वा सजले पात्रे तेन चतुर्थं पूरयेदुत्तारिकास्तेन सजलेन शुक्रेण पञ्चमं भगक्षालनतोयेन षष्ठं पूरयति । परात्मभक्तां कालीं तर्पयामीति प्रथमं निनयेत् । स्थण्डिले आस्तीर्णे कुशेषु प्रागग्रेषु उदगग्रेषु वा ईश्वरात्मानं कालीं तर्पयामीति द्वितीयं जीवात्मभजनीयां कालीं तर्पयामीति तृतीयं भगलिङ्गामृतप्रीतां कालीं तर्पयामीति चतुर्थं शुक्रोत्सवां कालीं तर्पयामीति पञ्चमं भगलिङ्गक्षालनतोयतृप्तां कालीं तर्पयामीति षष्ठं निःशेषान् सर्वान् सावशेषान् तत्पिपीपुर्जीवन्मुक्तो यदि क्रमशो गृह्णाति सत्येन त्वा तेजसाऽमृतायाऽमृतं संगृह्णामीति प्राश्नीयात्स्वप्ने तु दर्शनं तस्या अर्धसिद्धिरुदाहृता । तस्मादर्धसिद्धस्तान् पिपीपेदित्येके । चतुर्विंशत्यहर्दीक्षित इत्येके । यदि समस्य दीक्षयेयुर्योऽर्चयेयुरीपदीपत्सर्वे षडेव चमसा भवन्ति मातेव कालिका तस्य हितकारिणी सम्पद्यते ॥ ७६ ॥

यथाकथंचित्सुरतं सम्पाद्य तदासक्तः कालीं ध्यायति मनुमसंख्यं जपन्मुक्तकेशो नग्नः सोऽचिराद्योगीश्वरः सम्पद्यते ॥ ७७ ॥

श्मशानं गत्वा ब्रह्मक्षत्रवैश्यशूद्रान्यतमे शवे जाज्वल्यमाने तदसंभवे तत्र कालीमिष्ट्वा बलिं छित्वा शिष्टमसृक् श्मशानस्थेभ्यो भगवन्महारुद्रपूर्वकेभ्यो भूतप्रेतपिशाचेभ्यो ददामीति दिशि निनयेत् । यदि मनुष्यश्छिन्नः स्याच्चेदुत्तरस्यां तदन्यो भूचरश्छिन्नः स्याच्चेद्दक्षिणस्यां तदसृक् नीरचरो वा एवं पश्चिमस्यां खेचरो वा एवं पूर्वस्यां एवं तस्मिन्जाज्वल्यमाने बलौ तरुणीमारोग्यशालिनीमानीय रतिं कामं चाहूय भगमन्थनं कृत्वोत्तारिकाया लिङ्गं धृत्वोत्तरतो घृतमिश्रे दधनि गलितं वीर्यमसीति तस्मिन्वीर्यं निक्षिप्यादित्यं दृष्ट्वोर्ध्वं तां वस्त्रान्नधनैः संतोषयेत्कालीं प्रपद्ये खड्गवरौ प्रपद्ये मुण्डाभयौ प्रपद्ये मुण्डमालाकुण्ड-

लमण्डलानि प्रपद्ये सिंहं प्रपद्ये कुरुकुल्लां प्रपद्ये कुरुकुल्लासिंहं प्रपद्ये कालिकेयान्प्रपद्ये, जीवात्मानुग्रहामीश्वरात्मानं परात्मानुरक्तां प्रपद्ये, वर्धनं श्मशानस्थं प्रपद्ये त्रिशूलं च प्रपद्ये कपालं च प्रपद्ये पार्वतीं च प्रपद्ये वृषभं प्रपद्ये पार्वतीवृषभं प्रपद्ये भूतप्रेतपिशाचांश्च प्रपद्ये इति वाचयेत्ततस्तां विसर्जयेदेतेनैव योषामसंस्कृतां शोधयति तस्मादेष योषाशोधनमन्त्रः । **स्वयं चैनं** जपेद्रक्तोऽर्कपुष्पसहस्रं वामतो निदध्याद्दक्षिणतो वा अग्नौ नग्नोऽलङ्कृतो मुक्तकेशस्तामुद्दिश्य तेन दध्ना संमिश्र्याग्नौ जुहोमीत्येतेन सा प्रीणात्वित्युद्देशस्तस्मात्प्रतिपुष्पं मन्त्रमुच्चार्य तस्मिन्नग्नौ निक्षिपेत्स खेरचरः सम्पद्यते ॥ ७८ ॥

गृहे पतितानुत्सार्यान्केशश्मश्रुलोमनखान्यतमं च वस्त्रसंमार्जन्या गृहीत्वा वा कुशसंमार्जन्या वा काशसंमार्जन्या पाणिनाच्छाद्यापो योषाशोधनं मायावीजं च जप्त्वा ताभिरद्भिरभ्युक्षणं तस्या इत्येतद्**योषाशोधनं** सर्वत्र । तया सङ्गम्य चमसे सजले शुक्रमुत्तार्य सरजो नीरज **इत्येके** । संमार्जनीं च तत्र निधाय चिताग्नौ मध्याह्ने सकृत् कालीवीजं समुच्चार्य । कालिकायै सर्वाद्यायै सर्वादृष्टशून्यायै स्वाहेति चमसेन हुत्वा सर्वाचार्यः सम्पद्यते ॥ ७९ ॥

वेश्यामूर्ध्वमुखीमुक्तवच्छाययित्वा तया सह संगम्य रेतस्तत्रैव निपात्य भगे ततः पतितरेता उत्थायाचान्तः स्वरेतसा चितं भगमासीनः पश्यन् पश्यन् सहस्रं मनुं जपतीह सोऽदीनोऽन्ते कालीधामगामी सम्पद्यते ॥ ८० ॥

यथाकथंचिद्यत्रकुत्रचिन्नक्तं सुरतानन्दनिरतः सुरतानन्देषु भक्तेषु आह्लादो यस्यास्तां कालीं ध्यायति यः स शिवः सम्पद्यते ॥ ८१ ॥

ये दुष्टान्पुरुषान्वध्यान् काल्यग्रे निघ्नन्ति ते प्रतिक्षणमभिलषितसंपन्नाः संपद्यन्ते ८२

वशी हविष्यान्नषोडशग्रासभुक् लक्षजापी कालीचरणपरायण एवं दिवा नक्तं यथेच्छं भुक्त्वा शतं जप्त्वा यः सुरतं सम्पादयति सोऽचिन्त्यैश्वर्यः सम्पद्यते ॥ ८३ ॥

यो निशीथे सहस्रं जपति स युवतिशतवृतः सम्पद्यते ॥ ८४ ॥

**एतेनेश्वराणामनुष्ठानानि व्याख्यातानि वामानि ॥ ८५ ॥**

**तानि कालिकेयान्येवेत्येके ॥ ८६ ॥**

पानवर्जं तानि **दक्षिणानि** तस्या **इत्येके** ॥ ८७ ॥

देवताप्रसादकारणं किम् ॥ ८८ ॥

तदुद्योगः ॥ ८९ ॥

काल **इत्येके** ॥ ९० ॥

प्रदेश **इत्यपरे** ॥ ९१ ॥

तीर्थमि**त्यन्ये** ॥ ९२ ॥

**केऽप्यध्वरम्** ॥ ९३ ॥

अर्चनं केचित् ॥ ९४ ॥

स्वाध्यायं केचित् ॥ ९५ ॥

देवतायाः स्वतन्त्रत्वाद्यमेवैष वृणुते तेन लभ्यः, सर्वे वेदा यत्पदमामनन्तीति शब्दाच्च तदिच्छयेत्येके ॥ ९६ ॥

यथा वा एष जीवः स्वतन्त्रः पापदं पुण्यदं वा कर्मान्यद्वा स्वत एव वृणुते यस्मादेषः स्वतन्त्रः यथा जीवात्मानं ईश्वरः ॥ ९७ ॥

इति पारानन्दसूत्रे उत्तराध्याये द्वितीयमाह्निकम् ॥

---

## पारानन्दसूत्रे तृतीयमाह्निकम् ।

**देवताप्रसादलक्षणानि वक्ष्यामः ॥ ९८ ॥**

यथा वै बहवो जीवा एवमीश्वरा बहवो गणनीया जीवाः षडीश्वरा जीवो यद्दीक्षितो भवति तदेकमेवेश्वरं स्वीयत्वेन वृणुते तद्दर्शनाय च संयतो भवत्येवं भावनामय्या दीक्षयेश्वरो दीक्षितो भवतीश्वरो यद्दीक्षितो भवति तज्जीवं स्वार्थं दीक्षितमनुष्ठितानुष्ठानं च स्वीयत्वेन वृणुते तस्मिन् प्रसादं च निदधाति जीवो यद्दीक्षितो भवति यदनुष्ठानमनुतिष्ठति च तत्सर्वं विजानातीश्वर ईश्वरस्य सर्वज्ञत्वान्नायमेवमेष जीवः स्वार्थमीश्वरं दीक्षितमपि विजानाति यथा वायं दीक्षितो भवत्येवं स दीक्षितो भक्त्या यं न जानाति स एनं विजानातीति॥९९॥

तस्मिन्नीश्वरे दीक्षिते सत्येतस्मै एतस्मिञ्जीवे लक्षणान्युद्भवन्ति तैरुद्भूतैरनेन वेदितव्यं स मदर्थं दीक्षितोऽभवदिति यान्युद्भवन्ति तान्युदाहरिष्यामः ॥ १०० ॥ १५०० ॥

यां देवतामुपास्ते तस्या देवताया वयःसंवत्सरसंख्यासंख्यातवयोरूपवत्त्वमित्**येके** **द्वादशाब्दिकवयोरूपवत्त्वं सर्वेषामिति कालभैरवः** षोडशाब्दिकमिति **आकाशभैरवः** कोटिकन्दर्पसौन्दर्योपमेयसुरूपत्वं अद्भुतसुगन्धवत्त्वं अनुद्भूतलोमश्मश्रुवत्त्वं अप्रवृद्धकेशनखवत्त्वं अप्रवृद्धभ्रूयुगपक्ष्मयुगलोमवत्त्वं अकार्यव्यङ्गवत्त्वं कोटिवायूपमेयबलवत्त्वं निरामयत्वं खेदमलोज्झितत्वं अचिन्त्यकर्तृत्वं मनुष्यगन्धर्वैः सेव्यत्वं देवैर्वे**त्येके**। वर्णश्च श्वेतमिश्रः कृष्णो **वैष्णवानां** श्वेतः **शैवानां** श्वेतमिश्ररक्तः **शाक्तसौर्यगाणपानां** गोक्षीरधाराधवलामिषासृग्वत्वमि**त्येके नैक** इच्छन्ति। परितो गव्यूतिमात्रे तस्य सर्वप्राणिनां सर्वभाषाविज्ञानं तेषां शब्दो मन्दगभीरः सुखश्राव्योऽकठोरः सन्निहितासन्निहितातिसन्निहितसमश्राव्यो भवति । नेच्छन्त्येत**देके** । भक्तपरितः क्रोशानां शतमुत्सृष्टवैराः प्राणिनः परस्परं भवन्ती**त्येके ब्रह्मवादिन आमन**न्ति । **परितः क्रोशमात्रमेके** । व्याघ्रादयोऽश्वादयः शूराश्च स्वस्वेष्टेश्वरायुधमेकमभीष्टमेतस्यैतद्दक्षिणां सोर्ध्वत आकाशे प्रतिभासयन् दिशः प्रतितिष्ठति हेतोर्गृहीतमेव भवत्येतेनोत्सृष्टं पुनस्तद्वत्स्वेगामित्वं । द्वौ मनुष्यगन्धर्वौ परिचारकावेकश्छत्रधारी मृगेन्द्रासनधारी तथान्यः । सर्वत्रगमनं अपि कीटतिर्यग्ग्रामप्रवेश्ये । परितः पृथ्वी समा निष्कण्टका निर्मला निर्मलजलं तदधः सैकती भूमिरुत्तरतोऽनुकूलो वातो मन्दः सुगन्धः सुशीतल उत्तरतो जलायतनमुद्बाहुपुरुषमितमुद्बाहुपुरुषद्वयमितं दीर्घं तज्जलं पवित्रं गम्भीरं तस्मिन्प्रवाहवत्पश्चादुद्भूतं पुरस्ताच्छान्तं भवत्यव्याहतेच्छो भवति श्रुतितन्त्रस्मृतीश्च सर्वा वेत्ति सर्वं पदार्थमात्रं सोपक्रमं सपराक्रमं सत्यं वेत्ति तस्मात्सर्वज्ञो भवति । सकृच्छकृतां मूत्रस्य च प्रवृत्तिर्भवति नैनं क्षुधा बाधते न तृषा निद्राऽज्ञानयोश्चात्यतो लयः सम्पद्यते । अस्य रेतः प्रजामनुत्पादयति तस्मान्मोघवीर्यं भवती**त्येके** । वादिनां शिष्यताप्राप्तिः शत्रूणां दासता तथा स्यादाढ्यानां मत्तानां

नम्रता भवति । अमितबलोऽयमिति **नारायणः** । अस्य देहोऽच्छेद्योऽभेद्यः शस्त्रैरस्त्रैः । दोषमात्रराहित्यं पुण्यपापास्पृष्टत्वं जाग्रदेकावस्थत्वमीशैकाधीनत्वं च । यदाह: प्रातर्व्युष्टाया-मुद्भवन्ति रात्रौ तानि तिष्ठन्त्यासङ्गवतः शारीरकाणि च सर्वदा । एतद्वयमन्यं विहाय सर्वाणि तदिच्छया देशकालविशेषेण लक्ष्माण्यनुवर्तन्ते ततोऽनेन वेदितव्यं मयि स ईशः दीक्षितोऽभवदिति ॥ १ ॥

इति ज्ञात्वैवाग्निमुपसमाधाय स्वेष्टायै देवतायै ईश्वरात्मने अमुकाख्यायै स्वाहेति मध्ये, अमुकादिभ्यो वा अमुकस्यामुकायुधाय स्वाहेति परितः, अमुकस्यामुकेभ्योऽमुकादिभ्यो वा भूषणेभ्यः स्वाहेति परितः, अमुकस्यामुकायै शक्त्यै स्वाहेति परितः, अमुकस्यामुकाय वाहनाय स्वाहेति परितोऽमुकस्यामुकायाः शक्तेरलंकारायुधवाहनेभ्यः स्वाहेति दक्षिणतोऽमुकस्याऽमुकस्य वाहनस्यालंकारेभ्यः स्वाहेति तद्वामतः अमुकस्याऽमुकेभ्योऽमुकादिभ्यो वा प्राप्तदिव्यसाधनन्तदेहेभ्यो भक्तेभ्यः स्वाहेति तत्परितः पुनर्नेत्येवमेके । पयसा जुहुयाद्घृतेन दध्ना वा तिलैस्तैलेन वा समिद्भिः पर्णैः पुष्पैः फलैर्वोदित आदित्ये स्नातोऽस्नातो वा रात्रिं षट्धा विभज्य पञ्चधा वा । ब्रह्मशक्तिविष्णुशिवसूर्यदन्तिन एतेषां क्रमेण प्रदोष आप्रातर्वेयाः **साक्षात्कारकाला** अनुवत्सरो **ब्रह्मणो, विद्याशक्तेः** परिवत्सरः, **शिवस्य** संवत्सरो, **विष्णोः** इद्वत्सरः, **सूर्यस्य** इलावत्सरो **दन्तिनः** । सर्वे वा सर्वेषां भवन्ति सव्यायनमपसव्यायनमित्येके । वसन्तः **शक्तेर्ग्रीष्मः सूर्यस्य** वर्षा **ब्रह्मणः** शरद्विष्णोर्हेमन्तो **दन्तिनः** शिशिरः **शिवस्य** वसन्तः सर्वेषामित्येके । **सर्वे वा सर्वेषां** । सप्तमी **ब्रह्मणो** नवमी **शक्तेर्दशमी विष्णोरेकादशी शिवस्य** द्वादशी **सूर्यस्य** षष्ठी चतुर्थी वा **गणेशस्य** यानि लक्षणान्याविर्भवन्ति तैरेवायमणुर्महान्भवति गुणतो यथा चैत ईशाः परात्मानो मध्यमपरिमाणा महाँश्च आकाशादिभ्यो महान्भवत्यजडत्वादेतेषां । एते आकाशादयो जडा महत्परिमाणा अप्यजडान्नीचा भवन्ति तस्मादेषोऽणुरपि जीव ईशो द्रष्टा यस्माद्भवति । आईशसाक्षात्कारादस्वतन्त्रोऽन्यैर्जीवैस्ततः स्वतन्त्रः जीवो नित्यः स्वतन्त्र ईशसाक्षात्कारात् प्रागपि किं तत इति । अत्र **ब्रह्मवादिनो** वदन्ति । जीवाः स्वतन्त्राः कर्मकरणे कर्मजन्याददृष्टफलभोग ईश्वराधीनास्ततः साक्षात्कारतः दुःखमीशाज्ञप्ता भोक्तुं प्रवर्तन्ते अदुःखितास्तत्कृपया । **इदमत्र समाधानमामनन्ति ब्रह्मवादिनः** ॥ २ ॥

## इति परानन्दसूत्रे द्वितीयाध्याये तृतीयमाह्निकम् ।

---

**अथेश्वरसाक्षात्कारक्रमं वक्ष्यामः** ॥ ३ ॥

उद्भूतलक्षणो भक्त उपतिष्ठत्युदङ्मुखः ॥ ४ ॥

तत उक्तकाले उत्तरस्यामस्य पुरस्तादत्यन्तं तमोमण्डलमुदेत्याक्रोशतस्तत एष जपे-त्तस्या देवतायाः कवचं ततः प्रादुर्भवत्यादित्यवर्णं भामण्डलं तत एष जपेत्सहस्रनामस्तोत्रं मन्त्रं विचिन्तयन्तं भक्तमीश्वराकारो व्यक्तः प्रतिभाति । ततो भक्तो जपेन्नवार्णं मनुं वाहनं सवाहनाशक्तिर्वामतो यथास्थलमायुधानि भूषणानि च प्रतिभान्ति तथा व्यक्तं सर्वं । ततो व्यक्ते सत्यं प्रणमेत्प्रणते सा देवता प्रवदति किं ते कुशलमिति । ततो यं वदेदोमतः परं कुशलं सर्वं यतः शास्त्रोक्तं ते साधर्म्यं प्राप्तोऽहमिति । ततः सा देवता प्रवदति सत्यं सत्यं यथा त्वमात्थेति तथापि किंचिद्वरं प्रयच्छामीति प्रयच्छति सायुधाकृतिं शस्त्रं प्रय-च्छत्यस्मै एष प्रणम्य तदञ्जलिना गृह्णीयात् । ऋतावृतौ पक्षे पक्षे वा प्रत्यक्षं भवतु भवतो मुहूर्तं मुहूर्तद्वयं वा यदेच्छामस्तदा तदेति वा वरं वृण इति वृणीयात् । सा च प्रयच्छति यथेच्छमेवमेव**मुक्त्वदेवान्तर्धानक्रमः** ॥ ५ ॥

यथेच्छं विहरेत्ततो वासून्विसृज्य स्वेष्टलोकमधिगच्छति पराप्येवमाविर्भवतीत्यु-**न्मत्तभैरवः** । पूर्वं तस्य प्रच्छादक ईश्वर आविर्भवति पश्चादन्यैरीश्वरैः साकं परात्मा सोऽनुद्भूतचिह्नोऽपीश्वरं परात्मानं च पश्यतीत्ये**के** ॥ ६ ॥

## इति श्रीपारानन्दसूत्रे उत्तराध्याये चतुर्थमाह्निकम् ॥

---

## पारानन्दसूत्रे पञ्चममाह्निकम् ।

**अथ प्रायश्चित्तक्रमं वक्ष्यामो** निषिद्धाचरणे प्रायश्चित्तं येनादृष्टेन सम्पादितेन नष्टदुःखः सम्पद्यते तत्प्रायश्चित्तमित्युच्यते । प्रायश्चित्तान्युपवास–प्राणायाम–स्वाध्याय–स्नान–दानादिरूपाणि कर्माणि प्रायश्चित्तादृष्टजनकानि । **पारानन्दो** राजा अदण्ड्यान्दण्डयेत्का तत्र प्रायश्चित्तिरिति त्र्यहमुपवसेदेषा प्रायश्चित्तिर्निषिद्धाचरणे प्रायश्चित्तिर्न विहिताऽनिषिद्धाचरणे प्रायश्चित्तिरनिषिद्धाचरणे तु न पापं विहिताचरणेऽभ्युदयस्तस्मात्प्रायश्चित्तस्य विहितत्वात्ततोऽप्यभ्युदय **इत्युन्मत्तभैरवः ।** तस्मात्प्रायश्चित्तक्रमं वक्ष्यामः ॥ ७ ॥

ज्ञात्वाऽज्ञात्वा विवशोऽविवश आवृत्त्याऽनावृत्त्या रसपूर्वकमरसपूर्वकमिति तत्र ज्ञात्वा विवश आवृत्त्या रसपूर्वकं पापमाचरेत्तत्र चतुर्गुणं प्रायश्चित्तं तत्र क्रमशः क्रमशो न्यूने न्यूनम् ॥ ८ ॥

**पारानन्दो** राजा यद्यन्यधर्मान्मतान्युच्छेदयेद्यदसम्राट् स्यात्तर्हि मतानि तद्धर्मांश्च संस्थापयेत्स्वमतेऽधिकं ततो न्यूनमास्तिकमते ततोऽपि न्यूनं नास्तिकमते इति सम्पादयेन्नैवं यदि कुर्यात्का तत्र प्रायश्चित्तिरिति एकाहमुपवसेत्कायिकं वाचिकं मानसिकमिति त्रिधा पापं । तत्र नाभ्यधःकृतं कायिकं पद्भ्यां गोब्राह्मणादिवन्द्यप्रहरणं यदि कुर्यात्का तत्र प्रायश्चित्तिर्व्युष्टायां वसन्ते शरद्यनभ्रे आकाशे वा पञ्चक्रोशेभ्योऽधिकप्रदेशे यत्प्रवहज्जलं तीर्थं स्यात्तत्पद्भ्यामेव गत्वा तस्मिन्नाप्लुत्य शुचिर्भवति । एष पापी त्रिभिः शुध्यति राज्ञो दण्डेन, परत्र सादिसान्तदुःखभोगेन, प्रायश्चित्तेनेति । यदि मतविरुद्धमाचरेत् का तत्र प्रायश्चित्तिरिति पुनर्दीक्षां समाचरेत् यदि मतविरुद्धं भावयेद्भूतशुद्ध्यादिकं का तत्र प्रायश्चित्तिरिति पुनर्भावनामयीं दीक्षां कुर्यात्पुनर्दीक्षायां गुरोर्न किंचिदन्यं सर्वं समानम् । दीक्षानियमेषु येषामसंभवस्तदकरणान्न दीक्षान्यौन्यं योऽधिकया दीक्षया दीक्षितः श्रेष्ठो भवति तस्मात्तमभिवादयेत्तमभिवाद्याऽप्रह्वः स्याच्चेत्का तत्र प्रायश्चित्तिरिति स्नात्वा प्राणायामशतं कुर्यात्ततः सर्पिरश्नाति यत्स्नाति तदघं धून्वति, यत्प्राणानायमति तदप्रह्वत्वजाड्यमेव धून्वति, यत्सर्पिरश्नाति तदात्मानं तेजस्विनमेव कुरुते, यद्वा तमेव प्रह्वो दण्डवत्प्रणिपतेत्प्रणिपत्य तं ब्रूयाद्यदहं प्रमत्तोऽनभिवादयं तदेनश्छिन्धि प्रसन्नः पुष्टिं प्रसन्नतां मयि धेहीति । संभवत्यङ्गे यदङ्गन्यौन्यं तदङ्गमात्रावृत्तिरानित्यनिवर्तनप्रारम्भात्प्रारम्भे न्यौन्यं पूर्णं सम्पद्यते । **दीक्षितः सन्नदीक्षिताय शिष्याय मन्त्रमुपदिशेच्चेत्पुनर्दीक्षा । दीक्षिते आश्रमान्तरं प्रविश्य पुनर्दीक्षा । गुर्वन्तरं गत्वा पुनर्दीक्षा** ॥९॥

प्रायश्चित्तमेवं भवति यदेनसः फलद्वयमप्युच्छिनत्ति तत्ततोऽमोघं सम्पद्यते यथा प्रायश्चित्तेनैनो मोघं सम्पद्यते तथा केनचिदघेन पुण्यमपि मोघं भवति नत्वैश्वरधर्मजं

केनचिन्निवार्यं अदृष्टं एतद्द्वयोर्निवर्तकं सकृत्कृताज्जातमनन्तफलदं तस्माद्विद्वांस्तत्संचिनु-यात् ॥ १० ॥

**अथ नित्यार्चनस्यानुकल्पो** राज्ञो दण्ड्यदण्डनं यद्दण्ड्यान्दण्डयते राजा तन्नित्यार्चनमेव विदधाति तस्माद्यथा नित्यार्चनं प्रलोप्य प्रायश्चित्तिं विदधाति तस्माद्दण्ड्या-नदण्डयित्वाऽदण्ड्यान् दण्डयित्वा राजैकाहं द्व्यहं त्र्यहं वोपवसेत् ॥ ११ ॥

**अथ नित्यार्चनस्यानुकल्पो** भूरित्यावाह्य प्रतीके अमुकायै ईश्वरात्मने सायुधायै साभरणायै सवाहनायै सवाहनालङ्कारायै सस्ववाहनस्थासनायै सशक्तिकायै सशक्तिकायुधायै सशक्तिकालङ्कारायै सशक्तिकावाहनायै सशक्तिकावाहनालङ्कारायै सश-क्तिकावाहनस्थासनायै अमुकायै देवतायै सस्वभक्तायै नमो भुवरिति पुष्पाञ्जलिं निक्षिपत्यपि वाऽमुकायै नम इति स्वरिति स्तुत्वा महरिति विसर्जयेदनेन मन्त्रेण य एवं कुरुते सोऽर्च-नत्रयस्य फलमाप्नोति तस्मादर्चनत्रयस्याप्यनुकल्पो योऽनेन मन्त्रेण कुसुमाञ्जलिना देवतां यजते । अप्येकस्य पुष्पस्य वा पुष्पैकदेशस्य वा स देवताया विशेषार्चनेनार्चकः सम्पद्यते इति **प्रायश्चित्तम्** ॥ १२ ॥

यः कामयेत देवताप्रसादेनर्ध्नुयामिति स स्वेष्टदेवतावयःसंवत्सरसंख्यातेभ्यः सुरू-पेभ्योऽष्टवर्षाधिकेभ्योऽनुल्लङ्घिततद्वयःसंवत्सरेभ्यो ब्राह्मणेभ्यः शिखां भ्रूयुगपक्ष्मरोमाणि वर्जयित्वा सर्वेषां तेषां गात्राणां नापितेन क्षुरेण मुण्डनं कारयेदपि वा यावन्मन्येयुर्यदेष मुण्डयति तदात्मानं पापेभ्य एवोद्धरति । अभ्यङ्गमुन्मर्दनं कारयित्वा कोष्णेनोष्णेन स्नाप-यित्वाद्यं कौपीनं वस्त्रं द्वितीयं कटिस्थं तृतीयं नाभिसमदेशस्थं महच्चतुर्थमन्यत् ॥ १३ ॥

एवं वस्त्रचतुष्टयानां दशकं वा तृतीयचतुर्थयोराजिनमश्मजं कृष्णं व्याख्यातान्याभ-रणानि छत्रमुपानहौ कमण्डलून् पुष्पमालां काश्मीरं रक्तचन्दनं शुद्धां मृत्स्नां वा ताम्रभस्मादि बहुरोगघ्नं महौषधं पयो दधि घृतं संस्कृतमन्नं वा पानीयं सुखशय्यां असकृद्भोग्यामपि सुरूपां तरुणीं सकृद्भोगार्थं वेश्यां च प्रयच्छति तदात्मानं देवताप्रसादेनर्द्धयति । तेभ्यः प्रणामं श्रद्धया श्रद्दधानेभ्यो गृहस्थेभ्यः समर्थः प्रयच्छन् तदन्यतमं वाप्यथवा यदर्थी स्यात्तस्मै तमर्थं इत्युक्तस्यानुकल्पः । **नैतस्मिन्पात्रापात्रविचारः** । अध्याप-नस्य द्विजः पात्रं दक्षिणादानयोर्ब्राह्मणो विद्वानेव पात्रं विद्यातपोभ्यां युक्तं स एव यज-मानः श्रद्धया ॥ १४ ॥

सामर्थ्यं च सत्त्ववतो नितरां त्यागेच्छा यस्मिन्नुपस्थिते उपकारिणि इति पूर्वं दृष्टे संभवति तत्पात्रमित्येके ॥ १५ ॥

यथा यथा वागपराधः स्याज्ज्यायान् लघुर्वा तथा तथा ब्रह्मयज्ञः प्रायश्चित्तं कायाप-राधेषु सर्वेषु यज्ञाः प्रायश्चित्तीयाः प्रायश्चित्तं मनोपराधेषु सर्वेषु तथा तथा प्राणायामाः

प्रायश्चित्तं धनाद्यपराधेषु तथा तथा पात्रेषु दानं वा तथा तथा राजदण्डस्य स्वीकारः प्रायश्चित्तम् ॥ १६ ॥

तीर्थाभिगमनं वा एकविंशतिरुपवासानामाचरणं सर्वप्रायश्चित्तं उपवासश्चानशनं जलमात्राशनं वा एतस्य कृतस्य एतेन कृतेन फलं नोद्भविष्यति इति ज्ञानं मुण्डनं प्रति वृद्धानां लोम्नां भ्रूयुगपक्ष्मरोमाणि विना शिखावर्जं केशानां श्मश्रूणां च मुण्डनं वृद्धानां स्नानाचमनाङ्कनानि **प्रायश्चित्तमात्रस्य पुरस्तात्पश्चाच्चैतान्यन्वितानि भवन्ति ॥ १७ ॥**

**यस्मिन्नहनि प्रायश्चित्ताचरणं तस्मात्षष्ठेऽहनि मुण्डनाद्याचरणमिति पश्चाद्भवति ॥ १८ ॥**

**इति प्रायश्चित्तक्रमो व्याख्यातः ॥ १९ ॥**

**इति पारानन्दसूत्रे उत्तराध्याये पञ्चममाह्निकम् ॥**

---

## पारानन्दसूत्रे षष्ठमाह्निकम् ।

**अथ व्याख्यानक्रमं वक्ष्यामः** ॥ २० ॥

सृष्टौ कृतयुगे नानामतानि नानासंस्काराश्च ऋषिभिर्व्याख्यातानि व्याख्याताश्च स्वेभ्यः स्वेभ्यः शिष्येभ्यः प्रायच्छन् ते शिष्यास्तदनुचक्रुर्भावनामाचारांश्च तत्राहं **भगवान्परानन्द**स्तत्तद्भावनाभिर्भावितामिराचारैराचरितैस्तुष्टस्तेभ्यो यथार्थं मतमुपदिदिक्षुरवतरन्नवतीर्णोऽभुवमिति गङ्गायास्तीरेऽनुकूले पद्मासनस्थस्तं मामभ्यधावन् ऋषयो वसिष्ठाद्यास्ते प्रणिपत्याब्रुवन्नस्मानुपदिशाचक्ष्वेति सोऽहमब्रुव**मदीक्षिता अनुपदेश्या भवन्तीति मन्मते न न्यासो न हिंसेत्यादि** तेऽब्रुवन्यज्ञे हिंसा श्रूयते सा किं भवन्मतदीक्षितैर्नानुष्ठीयते ते किं न प्रत्यवायमयन्तीति सोऽहमब्रुवं युक्तं यदुक्तं न तत्र तर्को न युक्तिस्तत्सत्यमित्येवावधार्यं योज्यं ध्वन्यर्थकं योजितं परस्परमजिज्ञासोर्भाषण**मेवं त्रिधा भाषणं भवति** तत्राद्यमेवाहं वच्मि तस्माद्भवतां श्रद्धया शुश्रूषा मत्तश्चेच्छृणुध्वं नो चेद्गच्छध्वं यथेच्छमित्युक्तास्तेऽब्रुवन्न संदेहोऽस्माकं त्वद्वाक्ये **श्रुतिं** मीमांसयिष्याम **इति** पृष्टस्तदहमवोचं न यावत्पारानन्द्या दीक्षया युज्यते तावत्प्राणिहिंसनं यज्ञे न्यासश्चेश्वराणां प्राणिषु पारानन्द्या दीक्षायाः प्रागिति यज्ञे हिंसानुष्ठेयेति **ज्ञानानन्द**स्ततः परमनागसाम् ॥ २१ ॥

तेऽपृच्छन् दीक्षा सा कथं यया दीक्षया दीक्षिताः सन्तो वयं श्रवणाधिकारिणः सम्पन्ना भविष्याम **इति** पूर्वं दीक्षा व्याख्याता सा तेभ्यो व्याख्याता यथाकथंचित्तेषु नियमेष्वेकं नियममास्थाय दीक्षा सम्पद्यते ॥ २२ ॥

उपदीक्षोत्तरदीक्षयोरप्येवम् ॥ २३ ॥

एवं नित्यनिर्वर्तननियमेषु ॥ २४ ॥

मुख्यं तु यथोक्तम् ॥ २५ ॥

**इति** तेभ्यो व्याख्यातं तेऽब्रुवन् मुख्यमेव करिष्याम इति तेभ्यश्चतुर्विंशत्यहर्दीक्षितेभ्यो यथा यथा यन्मन्त्रेच्छा तेभ्यस्तेभ्यस्तान्मन्त्रान्दत्वा मतं मतधर्मांश्चोक्त्वा नित्यनिर्वर्तनं च ते कृतार्थमात्मानं मन्यमाना मां प्रणम्य यथेच्छमगमन् ते स्वान् स्वान् गृहान् गत्वैतदेव यथाधिकारं प्रचारयामासुः ॥ २६ ॥

अगस्त्याद्या नारदाद्या वामाचारिणो भविष्याम इत्यब्रुवंस्तेभ्योऽहमब्रुवं त्रिप्रकारं मद्यमुद्रामैथुनात्मकं द्विप्रकारं मुद्रामैथुनात्मक**मित्येके** समामनन्ति ॥ २७ ॥

तेऽपि पूर्ववत् ॥ २८ ॥

देवाख्यो देवदेवाख्य इति द्वावृषी मामागत्योत्तराचारिणौ भविष्याव इति ताभ्यामुत्तराचारमहमपि प्रायच्छं तावापन्नोत्तराचारौ व्रजतुर्यथेच्छं तेऽपि पूर्ववत् ॥ २९ ॥

समर्थो विद्वानर्थीति त्रयो वै ऋषयः समाजग्मुस्ते पूर्वं दक्षदीक्षिता अभवंस्ततो वामिनस्तत औत्तरास्तेऽपि पूर्ववत् ॥ ३० ॥

अयोध्यायां यः सुदर्शनोऽभूद्भूमिपालस्तं शाक्तमकरोत्पारानन्दं दीक्षितं वसिष्ठस्तस्मात्त-महिंसकं राजानं ज्ञात्वा परितः सर्वे राजानः सन्नद्धा युद्धायाह्वयन्त स राजा वसिष्ठं प्रणि-पत्योवाच मया युद्धमहिंसकेन कार्यं वा न कार्यमिति वसिष्ठस्तं गृहीत्वा मामभ्यधावत्प्रणि-पत्य प्रश्नं मामवददयं मे शिष्योऽभवदयोध्याधीशो राजा सुदर्शनः शाक्तो मच्छिष्यः पारानन्दो जात इत्युपलभ्याऽन्येऽरयस्तदीया अयमहिंसकोऽतः परमिति न योत्स्यतीति युद्धसन्नद्धा एवं निरोधयन्त एतज्जनपदपरितः स्थिता बभूवुरिति विज्ञायैष मामपृच्छत्स भव-न्निकटमानीत इत्येनं शाधीति ॥ ३१ ॥

अहमब्रुवं तमानयेति स प्रणिपत्योपस्थितस्तमुपदिशं युद्धाद्धर्म्यमन्यन्न पारानन्दानां राज्ञां तस्मात्त्वं युध्यस्व छिन्धि मुण्डानि जयमाप्नुहीत्युपदिष्टः स वसिष्ठश्च तावुभौ च तौ निर्गतौ बभूवतुः ॥ ३२ ॥

जयं चाऽऽप सः ॥ ३३ ॥

**केचित्पारानन्दा** अग्निहोत्रिणः समारभन्ते प्राणिन आनीय हन्तुमनुसंधाय यूपेषु यावद्बध्यन्ते तावन्नारदः पर्यटन् तत्राभ्यगच्छत्तानुवाच किमेतत्कुर्वते भवन्तस्ते ह प्रोचुः सत्रं सोऽब्रवीन्नैतत्सत्रमेषोऽपयज्ञो यत्पारानन्दा हन्तुं प्राणिन उद्युक्तास्तेऽब्रुवन् सत्यं सत्यं तस्मादेव देवतां न पश्यामस्तद्ब्रवीतु भवान्यदेतेनेश्वरीकृतेन सत्रेण द्रक्ष्याम इति तैः पृष्टो नारदो होवाच पारानन्दं यज्ञविधिमवधारयन्त्विति ॥ ३४ ॥

होमादिपूत्तरक्रत्वन्तेषु वधार्थं यज्ञेषु यावन्तः पशवस्ताः प्रतिकृतीः ॥ ३५ ॥

ये हिंसामाश्रित्य ऐश्वरान्धर्मान् वयं कुर्म इति ध्यायन्तः कुर्वन्ति न ते तानाप्नुवन्ति नैश्वरान्लोकान्समभिपद्यन्ते पतनधर्माणः ॥ ३६ ॥

हिंसायुपो नाशकरी हिंसा पुण्यौघनाशिनी ॥
हिंसामाश्रित्य यः कुर्यात्सुकृतौघान्सहस्रशः ॥
सुखमस्मै प्रदातुं ते न समर्थाः कथंचन ॥
रोगानाश्रित्य यक्ष्मादीन्य इच्छेत्सुखसाधकान् ॥
उपचारान्यथा मन्दो न ते स्युः सुखदायिन इति ॥ ३७ ॥
विषयुक्तं यथा तोयं न तृष्णां वारयेत्कचित् ॥
हिंसायुक्तं तथा पुण्यं न सुखं दातुमर्हति ॥ ३८ ॥
विहिताऽविहिता वापि हिंसा याऽनपराधिनाम् ॥
सर्वथा दुःखदा पश्चात्तस्मात्तां परिवर्जयेत् ॥ ३९ ॥

